योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM

Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 248 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 3 जुलाई 2021 शनिवार | पृष्ठ-4 | मूल्य- 2 रुपये

### सुभाषितम्

**यो न हृष्यति न द्वेष्टि न शोचति न काङ् क्षति।**
**शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः।।**

भावार्थ :
जो न कभी हर्षित होता है, न द्वेष करता है, न शोक करता है, न कामना करता है तथा जो शुभ और अशुभ सम्पूर्ण कर्मों का त्यागी है- वह भक्तियुक्त पुरुष मुझको प्रिय है ।

### संक्षिप्त वार्ताः

- **पंचचरणेसु भविष्यति सहायक प्रोफेसर (प्राध्यापक) प्रविष्टेः लिखित परीक्षा 30 अक्टूबरतः प्रारम्भः भविष्यति। 48 परिमित विषयेषु 2003 पदेसु भविष्यति प्रविष्टिप्रक्रिया, उच्चतर शिक्षा सेवा आयोगस्य अस्ति प्रविष्टि प्रक्रिया संचलनविधिः।**

- **विश्वस्य न्यूनातिन्यूनवयस्कः चतुरङ्गक्रीडकः- भारतस्य अभिमन्युः नूतनं प्रमाणं व्यरचयत्**

**नवदेहली।** विश्वस्य न्यूनातिन्यूनवयस्कः चतुरङ्गक्रीडकः इति पदं भारतस्य बालकः प्राप्त-वान्। द्वादशवयस्कः अभिमन्यु मिश्रः भवति एषः बालकः। हङ्गरिराष्ट्रस्य बुडापेस्ट नगरे आयोजिते चतुरङ्ग स्पर्धायामेव अस्य प्रामाणिको विजयः। 15 वयस्कं प्रति द्वन्दिं लियोण् लूक् मेन्डोण्के इत्याख्यं विजित्य भवति अस्य प्रामाणिको विजयः।



## ग्रामीणक्षेत्रेषु निर्मितस्वयंसहायतासमूहस्य महिलानाम् आजीविकायां प्रत्येकस्मिन् मासे सामान्यतः अष्टसहस्त्ररुप्यकाणां भविष्यति वृद्धिः

# मुख्यमन्त्रिणः योगिनः अभियानं गतिशीलं, महिलाभ्यः कुसीदेन विना प्राप्स्यन्ते चतुर्शतवाहनानि

**लखनऊ।** मुख्यमन्त्रिणः योगिनः आदित्यनाथस्य वृत्त्याभियाने नूतनाः आयामाः निर्मीयन्ते । आजीविका ग्रामीण- एक्सप्रेस योजनान्तर्गतं ग्रामीण क्षेत्रेषु निर्मित स्वयं सहायता समूहस्य महिलानाम् आजीविकायां वृद्ध्यर्थम् अस्मिन् वर्षे विना कुसीदेन चतुर्शतवाहनानि प्रदास्यन्ते। स्वयं सहायता समूह पक्षतः लघूद्योग मात्रेषु पुष्टाहार वितरणाय द्विशतकारयानानां उपयोगः करिष्यते । साकमेव रूर्बनसमूहेषु आगतानां पञ्चायतेषु द्विशत् ई-त्रिचक्रिकाः महिलाभ्यः प्रदास्यन्ते । मुख्यमन्त्रिणः योगिनः निर्देशे ग्रामीण क्षेत्तरेषु महिलाः सबलनिर्मातुम् उत्तर प्रदेश राज्य ग्रामीणा जीविकाभियानं महत्त्वपूर्णा भूमिका निर्वक्ष्यते । अभियान पक्षतः अधुना पर्यन्तम् आहत्य चतुष्षष्ट्यधिक द्विशतस्य यानानां वितरणं कृतं, यस्य निमित्तं केन्द्रसर्वकारेण उत्तर प्रदेश राज्य ग्रामीणाजीविकाभियानाय स्वर्ण पदकम् अपि प्रदत्तम् । योजनान्तर्गतम् अधुना पर्यन्तं प्रायेण अष्टकोटिरुप्यकाणि चितानां स्वयं सहायता समूहानां सदस्येभ्यः प्रदत्तानि। आजीविका ग्रामीण-एक्सप्रेस योजनान्तर्गतं कारयानेभ्यः विना कुसीदेन अधिकतमं सार्धषड्लक्षरुप्यकाणि उपलप्स्यन्ते। तत्रैव, ई-त्रिचक्रिकायै अधिकतमं सार्धैक लक्षरुप्यकाणि विना केनचित् कुसीदेन प्रदीयते । एतत् धनं सम्बद्धसमूहाय दीयते । धने प्रत्यार्पिते सति अपरः सदस्यः तद्द्वारा लाभान्वितः भवति । योजनायाः पात्रतायै आवश्यकम् अस्ति यत् समूहस्य सदस्यः न्यूनातिन्यूनं पूर्वतनाभियानेन युक्तः भवेत्। अभियानपक्षतः अन्य प्रधानधनस्य लाभः प्राप्येत। उत्तर प्रदेश राज्य ग्रामीणाजीविकाभियानस्य प्रबन्धनिदेशकेन भानुचन्द्र गोस्वामिना उक्तं यत् राज्यस्य चतुर्त्रिंशज्जिल्लानां त्रिसप्तति विकास खण्डेषु उपयोजनायाः सञ्चालनं कृतं, अपि च अस्मिन् वर्षे पञ्चाशज्जिल्लानां विंशत्यधिकैकशते जनपदेषु कारयानानां वितरणं करिष्यते ।

### स्वयं सहायता समूह पक्षतः लघूद्योग मात्रकेषु पुष्टाहारस्य वितरणाय द्विशतकारयानानां करिष्यते उपयोगः



द्विशत् ई-त्रिचक्रिकाः रुर्बनसमूहे आगतानां पञ्चायतेषु सदस्येभ्यः प्रदास्यन्ते

### एकया योजनया चत्वारः लाभाः

आजीविकाग्रामीण-एक्सप्रेसयोजनया ग्रामीणक्षेत्रेषु एकेन सह चत्वारः लाभाः भवन्ति । अनने स्वयंसहायतासमूहानां महिलाभ्यः वृत्तिः प्राप्यते। साकमेव अर्थप्राप्तेः सामान्यतः अष्टसहस्त्ररुप्यकाणां प्रतिमासे वृद्धिः भविष्यति । एतत् अतिरिच्य परिवहनक्षेत्रस्य अध्ययनं कृत्वा एतादृशमार्गस्य चयनं क्रियते, यत्र वाहनानाम् आवश्यकता भवेत् । अनेन सम्बद्धानां ग्रामीनक्षेत्राणां जनेभ्यः विद्यालये, महाविद्यालये अन्यकार्येषु च आवागमने सुविधा भवति । योजनान्तर्गतं न्यूनातिन्यूनं अष्टासन्दवाहनानि विङ्गर, बोलेरो, टाटामैजिक, ओमनी चेत्यादिभ्यः अनुवृत्तिः दीयते । समूहस्य सदस्यपक्षतः धनराशिप्रत्यर्पणं षड्वर्षेषु द्विसप्ततिमितासु आवृत्तिषु करणीयं भवति ।






## वीथीशुनकेभ्यः अपि भोज्याय अधिकारः अस्ति, तेभ्यः आदरः देयः इति दिल्ली उच्चन्यायालयेन आदिष्टम्



**नवदेहल्ली** वीथीशुनकेभ्यः भोज्याय तथा तेभ्यः भोज्यं दातुं नागरिकाणां च अधिकारः अस्ति इति दिल्ली उच्चन्यायालयेन निरीक्षितम्। पशूनां संरक्षणं नागरिकाणां धार्मिकं कर्तव्यं भवति। वन्ध्यंकृतान् तथा वाक्सिनीकृतान् शुनकान् गृहीतुं नगरसभाधिकारिणाम् अधिकारः नास्ति। कारुण्येन, आदरेण च वीथीशुनकाः पालयितव्याः इति उच्चन्यायालयेन आदिष्टम्। शुनकेभ्यः अवश्यं जलं अन्नं च लभते इति दृढीकरणमपि करणीयम्। खाद्य-पेयेभ्यः प्रत्येकं स्थलम् अपि सज्जीकरणीयम् इति राष्ट्रिय-जन्तुसंरक्षणसभां प्रति देहल्याः उच्चन्यायालयेन आदेशो दत्तः।

## यूरो चषकः - तुरीयपादस्पर्धाः अद्य आरभन्ते

पादकन्दुकक्रीडाराधकाणाम् उत्साहं वितीर्य 'यूरोकप' नामक पादकन्दुकक्रीडापरम्परायाः Samora चतुर्थांशपादस्पर्धाः अद्य रात्रौ सार्धनववादने डभारतसमयः. आरभन्ते। रूस्थे सेन्ट्पीटेर्स्बर्ग क्रीडाङ्गणे सम्पत्स्यमाना स्पेन-स्विट्जरलैंड स्पर्धा एव चतुर्थांशक्रीडासु प्रथमा। 24 दलैः सम्पन्ना यूरोचषकयुद्धभूमिः अष्टराष्ट्राणां स्पर्धाक्षेत्ररूपेण आकुञ्चितास्ति। स्पेयिन-स्विट्सर्लान्ट् स्पर्धां विना इटली-बेल्जियम, चेक् रिपब्लिक- डेन्मार्क इंग्लैंड - युक्रैन् स्पर्धाश्च शुक्रशनिदिनयोः सम्पत्स्यन्ते। कुजवासरे बुधवासरे च पूर्वान्तिमस्पर्धा, तदनन्तरं रविवासरे अन्तिमस्पर्धा च सम्पत्स्यते।

## उत्तर प्रदेश संस्कृत संस्थानस्य बहूत्तमं समाचारं




**लखनऊ।** यदि भवान् देवभाषां संस्कृतं पठितुं वक्तुं चेच्छति, तार्हि भवत्कृते बहूत्तमं समाचारं वर्तते। भवान् गृहे एव उपविश्य 'मिस काल' इति कृत्वा संस्कृतं ज्ञातुं निःशुल्कप्रशिक्षणार्थं पञ्जीयनं कारयितुं शक्नोति। शुक्रवारदिनादेव पञ्जीयन कार्यस्य शुभारम्भं भविष्यति। देवभाषां प्रति जनानां मनसि सुभावनां विकसितं कर्तुं तथा संस्कृतं च ज्ञातुं उ0प्र0संस्कृतसंस्थाद्वारा एता नवीना सुव्यवस्था शुभारम्भा भविष्यति । अस्यां देवभाषाकायञ्योजनां सर्वे चिकित्सकाः, अभियन्ताः, व्यावसायिकाः, विद्यार्थिनः कर्मचारिणः सामान्यजनादयश्च संस्कृतप्रशिक्षणस्य कृते स्वप्रतिभागितां सुनिश्चितं कर्तुं शक्नुवन्ति।

## जिला पंचायत अध्यक्षस्य मतदानं अद्य



**प्रयागराजः।** जिलापंचायत अध्यक्षाम् श्वः मतदानंभविष्यति, सुरक्षा व्यवस्थायै आरक्षिभिः संवृतं जिला पंचायत भवनम्। भाजपा दलस्य प्रतिष्ठा समाज-वादी दले भाजपा दलयो मध्ये प्रतिस्पर्धा नैकट्येन। सम्प्रति जिला पंचायत विजित सदस्यानां संख्या 84 अस्ति अद्य पर्यन्तं भाजपा पार्श्वे 30 सपापार्श्वे 28 सदस्याः सन्ति, अत्र बसपा, अपना दलएस एतयोः 4-4 सदस्याः, कांग्रेसः आम आदमी, एमआईएम एतेषां 2-2 सदस्याः विजिताः। द्वादशाधिकं निर्दलीयाः विजिताः। एतस्यां स्थित्यां सत्तायाः कुंजिका निर्दलीयेसु, लघुदलीय सदस्येसु च उपरि निर्भरा अस्ति । विजयं अति दुष्करं सम्भाव्यते।

## सम्पादकीयम्

### वैदिककालादेव अद्यावधिपर्यन्तं प्रचलत्येव

भारतं सदैव शरणागतानां परिपालकः आसीत्। अद्यापि इयं परम्परा विद्यमाना। आधुनिकी सन्दर्भेऽपि शरणागतानां स्वरूप वैविध्यं भवितुं शक्यते। प्रवासिनः अपि शरणागतः भवितुं शक्यते वैदिशिकाश्चापि शरणगतश्रेण्याम समाहिताः भवन्ति। तेषां समेषां सहाय्यं कर्तुम् परम्परा वैदिककालादेव अद्यावधिपर्यन्तं प्रचलत्येव। उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः। तस्य पूजा विधातव्या सर्वदेवमयोऽतिथि। **अर्थात्** उत्तम से उत्तम वर्ण के यहाँ भी कोई अतिथि वह चाहे कितना भी नीच हो यदि आये तो उसकी पूजा करनी चाहिए। कहा भी है- अतिथिर्धर्मरूपेहि गृहस्थाना गृहे गृहे। 'अतिथिसत्कारः केवल शिष्ट पुरुषों की परम्परा के कारण अनुवर्तनीय नहीं है अपितु इसके न करने से नाना प्रकार की हानियाँ हो सकती हैं। यह स्वयं कठोपनिषद् में लिखा है- वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् तस्यैताँशान्तिं कुर्वन्ति हर वैवस्वतोदकम्।

## गृहे मुमूर्षामि

दृश्यमवर्णनीयम असह्या वेदना
चरमं सत्यम्
- अश्रुगंगा
- वन्याप्लाविता
आधिभौतिकं बलवत्तरम् त्रीणि
प्रमाणानि द्रढीभूतानि दूरदर्शनेषु दृष्टं
प्रत्यक्षम् श्रुतं कदाचित्
प्रत्यावर्तनकर्तृभ्य आप्तपुरुषेभ्यः
अनुमिनोमि का अवस्था कोबिड
चिकित्सालये मित्र-राघवस्य संप्रति
। -रोगिणां न सन्ति आत्मियास्तत्र
-कापि सूचनात्र न दीयते मृताहतानां
-हाय!
-शौचालयं निकषा शवा निपतिताः
-अर्द्धमृता अलिन्दे केचन
-विवसनाः भूमिकोलाग्रता इतरे
-बुभुक्षाजर्जरिताः अन्ये
-हा दुर्दैवम् ! रक्ष विश्वम् । मारय
करोनाम् ।
-खाद्यं दीयते, रोगी स्वयं
भोक्तुमसमर्थः
-निःशेष अमुजानः
-न दीयते तत्र
-श्वासकष्टेन कम्पते शरीरं
-सेविकाः नायान्ति
-चिकित्सकाः समयानुसारेण
-निष्पेतिताः जर्जरिताः कालकवलीकृता
कोबिडग्रस्थाः साक्षादत्र
यमालये कण्टकशय्यायाम् । पाहि मां
पाहि मां
-सदाशिव आश्वासितः
मित्रं दृष्ट्वा अवाक् अभूत्
-इदृशी अवस्था तव ! पारिपार्श्विकं
संबुध्य किंकर्तव्यविमूढोभवत् ।
भो भो क्रन्दन् कृताञ्जलिपुटेन
राघवः सदाशिवमनुरोधयति
मां गृहं नय, मां गृहं नय
अहं गृहे मुमूर्षामि ।

**नन्दप्रदीप्तकुमारः**

# 'तस्मिन् सति श्वासनप्रश्वासयोर्गतिविच्छेदः प्राणायामः'

शौचम् नाम पवित्रता। पवित्रतायाः प्रकारद्वयं भवति, बाह्यशुद्धिः आन्तरिकशुद्धिश्चेति। एवञ्च जल-मृदभिः शरीरस्य, स्वार्थत्यागेन व्यवहारस्य आचरणस्य च न्यायोपार्जितद्रव्यैः प्राप्त सात्त्विकपदार्थानां पवित्रतापूर्वकसेवनेन आहारस्य शुद्धता प्राप्यते या बाह्यिकशुद्धतेति वक्तुं शक्यते। एवमेव अहिंसा-राग-द्वेष-भय-काम-क्रोधादीनां दुर्गुणानां त्यागेन आन्तरिकशुद्धताश्च समवावाप्तुं शक्यते। शौचविषये मनुना उक्तम् - अद्भिर्ग्रात्राणि शुद्धयन्ति मनः सत्येन शुद्ध्यति। विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यति। स्व-सामर्थ्यानुसारेण कृते कर्मणि प्रभोः न्यायावस्थानुसारेण यल्लभ्यते तस्मिन् सन्तुष्टिरेव सन्तोषः। अर्थात् सुख-दुःख-लाभ-हानि-यश-अपयश-सिद्धि-असिद्धि-अनुकूलता-प्रतिकूलता-इत्यादिषु सर्वदा सन्तुष्टि प्रसन्नचित्तता एव सन्तोषः। महर्षिव्यासः वदति - सन्तोषामृततृप्तानां यत्सुखं शान्तचेतसाम्। कुतस्तद्धवनलुब्धानामितश्चेतश्च धावताम्।। इति। स्वकर्त्तव्यपालने भवितव्यानां विघ्नादीनां सहनं कृत्वा निरन्तरं स्वधर्मपालनमेव तपः। अर्थात् शीतोष्ण-मानापमान-लाभहानि-जयप-राजय-सुख-दुःखरूपाणां द्वन्द्वानां सहनपूर्वकं स्वलक्ष्य-प्राप्यर्थमग्रेसरणेव तपः। अतेवोक्तम् - 'तपो द्वन्द्वसहनम्' इति। कल्याण प्रदशास्त्राणा मध्ययनं तथा इष्टदेवस्य जप-स्तोत्रादि पठन-पाठन-गुणानुवादकरणमेव स्वाध्याय उच्यते। महर्षिव्यासेनापि उक्तं यत् प्रणवदि पवित्रमन्त्राणां जपस्तथा वेदोपनिषद् गीतादिशास्त्राणा मध्ययनं स्वाध्यायः इत्युच्यते। तद्यथा - 'प्रणवादिपवित्राणां जपो मोक्ष शास्त्राणामध्ययनं वा' इति।। एवञ्च शाब्दिकदृष्टया स्वाध्यायशब्दस्यार्थद्वयं फलति। तद्यथा- सु-अध्ययनम् स्वाध्यायः। अर्थात् उत्तममध्ययनम् । ऋषिप्रतिपादितशास्त्राणां श्रद्धापूर्वकमध्ययनमिति। अपरं सु-अध्ययनम् स्वाध्यायः। अर्थात् स्वकीयास्तित्वविषये अध्ययनम्। यथा- कोऽहं कुतः आयातः किं करवाणि इत्यादि विषयेषु चिन्तनं स्वाध्याय इत्यपि उच्यते। परमात्मानि सर्वक्रिया समर्पणमेव ईश्वरप्राणिधानम्। श्रीमद्भगवद्गीता यामप्युक्त मस्ति यत् साधकः यत् कार्यं करोति, यत् भक्षणं करोति, यत् हवनं करोति, यत् दानं करोति यत् तपो वा करोति तत् सर्वं भगवदर्पणमिति। यथाचोक्तम् - यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदार्पणम्। स्थिरसुखमासनम्। अर्थात् स्थिरतया दीर्घकालं यावत् सुखेन निषदनम् आसनमिति। पद्मासन-सिद्धासन-सिंहासन-भद्रासन-मुक्तासन-वज्रासन-गोमुखासन-वीरासन-कुक्कुटासन-कूर्मासन-वृक्षासन-सर्वाङ्गासन-उत्तानपादासन-हलासन-शशकासन-वक्रासन-जानुशिरासन-मकरासन-चक्रासन-भुजङ्गासन-उष्ट्रासन-सिद्धासन-गर्भासन-मयूरासन-वृश्चिकासन-गरुडासनदीनि योगासनान्यत्र संगृह्यन्ते। 'तस्मिन् सति श्वासनप्रश्वासयोर्गतिविच्छेदः प्राणायामः' सूत्रमिदं व्याजक्षाणः माधवाचार्यः स्वकीयसर्वदर्शनसंग्रहे वदति यत् आसनस्थिरीभूते सति प्राणायामः प्रतिष्ठतो भवति। स च श्वास-प्रश्वास योर्गतिविच्छेद स्वरूपः। बाह्यस्य वायोरन्तरायनं श्वासः। अन्तःस्थितस्य वायोः बहिर्निःस्सारणं प्रश्वासः। उभयोरेव सञ्चारणाभावः प्राणायामः। स च चतुर्विधः-रेचकः (बाह्यवृत्तिः) प्राणायामः, पूरकः (आभ्यान्तरवृत्तिः) प्राणायामः कुम्भकः (स्तम्भवृत्तिः) प्राणायामः,बाह्याभ्यान्तरविषयाक्षेपी प्राणायामश्च। उक्तञ्च योगदर्शने - 'बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः। 'बाह्याभ्यान्तरविषयाक्षेपी चतुर्थः।' प्राणायामस्य लाभविषये मनुना उक्तं यत् प्राणायामात् शारीरिक-मानसिकदोषाणां च नाशो जायते इति। एवञ्च प्राणायामेन शरीरमलप्रक्षयः शरीरशुद्धिर्नैरोग्यं च भवतीति। भस्त्रिकया यथा धातुमलं संशोध्यते तथैव शरीरमलं प्राणायामेन शोध्यते। उक्तञ्च मनुना - दुह्यते ध्यायमानानां धातूनां हि यथा मलाः। तथेन्द्रियाणां दुह्यन्ते दोषाः प्राणस्य निग्रहात्। श्रीमद्भगवद्गीतायामपि उक्तं यत् प्राणायामोऽपि मुमुक्षोः पापक्षयार्थिनो यज्ञ एव, अतः स कर्तव्य एव। तद्यथा - अपाने जुह्णति प्राणं प्राणेऽपानं तथा परे। प्राणापानगतीं रुद्ध्वा प्राणायामपरायणाः। इति प्रत्याहारोस्ति योगस्य पञ्चमाङ्गं तथा बहिरङ्गसाधनस्य अन्तिमाङ्गम्। इन्द्रियाणां स्वविषयेभ्यो निवृत्तिः, अन्तर्मुखी वृत्तिश्च प्रत्याहार इत्यभिधीयते। उक्तञ्च- 'स्वविषयासंप्रयोगे चित्तस्य स्वानुकार इवेन्द्रियाणां प्रत्याहारः' इति। एतस्माद् इन्द्रियाणां विशित्वम् उपपद्यते। अतेव उक्तम् - 'ततः परमां वश्यतेन्द्रियाणाम्' इति। अर्थात् प्रत्याहार सिद्धे सति इन्द्रियाणि साधकान ुकारकाणि जायन्ते। बाह्यविषयेभ्यः समागत्य भगवत्प्रीतौ संलग्नानि भवन्ति। यतो हि विवेकिनां कृते सर्वाण्यपि पर्थिववस्तुजातानि दुःखमयमिति प्रतीति भवन्ति। उक्तञ्च- 'परिणामतापसंस्कार दुःखैर्गणवृत्तिविरोधाश्च दुःखमेव सर्वं विवेकिनः'इति। धारणा योगस्य अन्तराङ्गेषु प्रथमङ्गमस्ति। 'देशबन्धश्चित्तस्य धारणा' अर्थात्देशविशेषे चित्तस्य बन्धनं धारणा इति। देशविशेषमित्युक्ते नाभिचक्र-हृदयकमल-भ्रूमध्य-मूर्धा-मूर्धाज्योति-नासिकाग्र-जिह्वाग्र-बह्नरन्ध्रादय अवबुध्यते इति। योगयाज्ञवल्क्य संहितायामुक्तमस्ति यत् - देहान्तरे स्थितस्य हृदयकमलस्य अन्तराकाशे बाह्याकाशधारणमेव धारणा। उक्तञ्च - अस्मिन् बह्रपुरे गार्गि यदिदं हृदयाम्बुजम्। तस्मिन्नेवान्तराकाशे यद् बाह्याकाशधारणम्।। 'तत्र प्रत्ययैकतानताध्यानम्' ध्यानविषये प्रत्यय अर्थात् चित्तवृत्तिनामेकतानता अर्थात् एकाग्रीकृते चित्ते ध्येयस्य वस्तुनः एककाररूपेण प्रवाहो (सा धारणा तैलधारवत् निर्दिष्ट समय पर्यन्तमविच्छिन्नतया चलति) ध्यानमित्युच्यते। याज्ञवल्क्यसंहितायां तु मनसा आत्मस्वरूपस्य वेदनमेव अर्थात् मनोनिग्रहमेव ध्यानमित्युक्तम्। समाध्यवस्थायां ध्यान-ध्यातृ-ध्येयानामेकरूपता संपद्यते। यदा ध्यानं ध्येयाकाररूपं स्वरूपशून्यमिव वा भवति तदा समाधिरित्युच्यते। उक्तञ्च 'तदेवार्थमात्रनिर्भासं स्वरूपशूनयमिव समाधिः' अर्थात् यस्यामवस्थायां ध्यानं ध्येयवस्तुमात्रभासात्मकं भवति तथा ध्यानकर्त्तुः स्वकीयस्य स्वरूप शून्यमिव भवति समाधिः। जीवात्मपरमात्मनो अभेदानुभूतिरेव समाधिरित्यापि ब्रुवन्ति। एवम् अष्टाङ्गयोगसाधनेन साधकः मनोनिग्रह शारीरिकम्, एकान्तिकम्, आत्यन्तिकं सुखं चावाप्य मोक्षञ्चाधिगच्छति। अतैव आधुनिक कालेऽपि तस्य महत्त्वमधिकता वर्तते इति विज्ञाय जनाः अष्टाङ्गयोगमनुसरन्ति। अर्थात् योगसदृशविषये अनेकेषां जनानां प्रवृत्ति रवलोक्यैव इदमनुमीयते यत् तेऽपि जना स्वप्रयोजनपूर्त्यर्थमेव योगविद्यायाः समाश्रमं गृह्णन्ति। अनेन योगस्य जनानां प्रयोजन पूरकक्षमतायाः विषये ज्ञायते। अतः प्रयोजन पूरकसामर्थ्यवत्त्वात् एव योगस्य साम्प्रतिक समाजे प्रयोजनमूलकता प्रतिपादिता। इति शम्। एवञ्च परिणामकारितया यदि मनसः नियन्त्रणं न शक्यं तर्हि तत्- समग्रव्यक्तित्वस्य आघातं जनयेत्। मनसः नियन्त्रणं साधयितुमशक्ताः जनाः स्वमानसिकद्वन्द्वकारणतः मनोविकारं प्राप्नुवन्ति। अत्यन्तमनुकूलपरिस्थितौ अपि ते स्वसामर्थ्यं निरीक्षां चावगन्तुं नार्हन्ति। वस्तुतः मनोनिग्रहात् प्राप्यमाणा परमा स्थितिः नाम आध्यात्मसिद्धिः एव। लौकिकभाषया वदामश्चेत् मनोनिग्रहात् सहजतया जायमानः परिणामः नाम परिपूर्णं व्यक्तित्वम्। तादृशः दृढमनस्कः महत्यां प्रतिकूलपरिस्थितौ अपि यशस्वी भवेत्। मनोनिग्रहात् शान्तिः शान्त्या चित्तस्वास्थ्यं, चित्तस्वास्थ्यात् सुखप्राप्तिः इति शम्।



# 'अश्वमानय' इति श्रुते आनीतं पशुं दृष्ट्वा अश्वोऽयमिति ज्ञानम्

प्रस्तावना - शाब्दबोधाय वृत्तिज्ञानमावश्यकम्। तत्र शाब्दिकमते तु वृत्तिर्द्विधा, शक्तिः व्यञ्जना च। शक्तेः ग्राहकाणितावत् - 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः' इत्यभियुक्तोक्त्या व्याकरणादीनि। व्याकरणाद्यथा- 'दक्षस्यापत्यं दाक्षिः'1 इत्यत्र दाक्षिपदस्य दक्षापत्ये शक्तिग्रहः, 'अश्व इव प्रतिकृतिर्यस्य सः अश्वकः'2 इत्यत्र अश्वकपदस्य गर्दभे शक्तिः। उपमानाद्यथा - 'गोसदृशो गवयः' इति श्रुतस्य वने तथाकृतियुक्तपशुदर्शनात् गवयोऽयमिति ज्ञानम्। कोशाद्यथा - 'शम्भुरीशः पशुपतिरि'त्यादि। आप्तवाक्याद्यथा - अयमश्वपदवाच्यः इति। व्यवहाराद्यथा - 'अश्वमानय' इति श्रुते आनीतं पशुं दृष्ट्वा अश्वोऽयमिति ज्ञानम्। वाक्यशेषाद्यथा - 'यवमयश्चरुर्भवति' इत्यत्र यवशब्दस्य आर्य्यव्यवहारमनुसृत्य दीर्घशूकस्य, म्लेच्छव्यवहारमनुसृत्य कङ्कोश्च सन्देहे - वसन्ते सर्वसस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः। इति वाक्याद् दीर्घशूकस्यैव ज्ञानं भवति। विवृतिर्विवरणं, तस्माद्यथा - 'गौः सास्नादिमत्पिण्डमि'ति विवरणात्सास्नादि मत्पिण्डस्य गोपदवाच्यताज्ञानम्, यद्वा 'हरिर्वासुदेवः' इत्यत्र नानार्थकस्य हरिपदस्य वासुदेवेऽर्थे शक्तिग्रहः। सिद्धपदस्य सान्निध्याद्यथा - 'कमले मधुकरः पिबति मधु' इत्यादौ कमलपदसान्निध्यान्मधुकरपदस्य भ्रमरे शक्तिः, मधुपदस्य पुष्परसपदे च। शक्तिविषये तार्किकमतम् - तत्र प्रथमं प्राचीननैयायिकाः एवं ब्रूवते - 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इति अर्थविशेष्यिका पदप्रकारिका, 'इदं पदमिममर्थं बोधयतु' इति पदविशेष्यिकाऽर्थप्रकारिका ईश्वरेच्छा शक्तिः। एवञ्चोक्ता ईश्वरेच्छारूपा शक्तिरेव सम्बन्धोऽपि वर्त्तते। आधुनिकसङ्केतेष्वपि 'एकादशेऽह्नि पिता नाम कुर्य्यात्' इति श्रुतिवचनेन ईश्वरेच्छा भवत्येव। अस्मदादिषु अपभ्रंशेषु नामसु शक्तिग्रहस्तु शक्तिभ्रमेण लक्षणया वा जायते। नव्यनैयायिकास्तु इच्छा एव शक्तिरिति मन्यन्ते । तेन आधुनिकसङ्केतेष्वपि प्रयोगकर्त्तुः इच्छासत्त्वात् शक्तिर्भवत्येव, लक्षणायाः आवश्यकता न स्यादिति लाघवम्। ईश्वरेच्छारूपायाः इच्छारूपायाः वा शक्तेः विषयतारूपः सम्बन्धः यद्यपि त्रिषु विषयेषु- पदे, अर्थे, शाब्दबोधे च विद्यते, तथा च विषयतासम्बन्धेन शक्तिमत्त्वं वाचकत्त्वम् अथवा वाच्यत्वमिति लक्षणेन अतिव्याप्तिदोषः स्यात्, तस्माद्- बोधनिष्ठजन्यतानिरूपितजनकतावत्त्वेन शक्तिविषयो वाचकः, पदजन्यबोधविषयत्वेन शक्तिविषयो वाच्यः इति बोध्यम्। तार्किक मतखण्डनम् - तार्किकोक्ता ईश्वरेच्छारूपा शक्तिः न भवितुम् अर्हति। यतो हि यः पदपदार्थयोः सम्बन्धो भवेत्, सः एव शक्तिपदेन उच्येत। इच्छायाः सम्बन्धत्वाभावेन शक्तित्वाभावः। 'सम्बन्धो हि सम्बन्धिद्वयभिन्नत्वे सति द्विष्ठत्वे च सति आश्रयतया विशिष्टबुद्धिनियामकः। तथा च यः सम्बन्धिनोः आश्रयतायाः नियामकः, स एव सम्बन्धः कथ्यते। अत्र तु सम्बन्धिनौ पदपदार्थौ, तौ न इच्छायाः आश्रयौ, चेतने आत्मनि एव इच्छायाः आश्रयता सम्भवात्। अत एव घटशब्द इच्छावान्, तदर्थो वा इच्छावान् इति न व्यवहारः। वैयाकरणमतम् - तत्रादौ कौण्डभट्टमतन्तन्निरसनञ्च प्रदर्श्यते - वैयाकरणभूषणसारे वाक्यपदीयकारिकया शक्तिस्वरूपमाह - इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा। अनादिरर्थः शब्दानां सम्बन्धो योग्यता तथा।। इन्द्रियाणामित्यत्र निष्ठत्वं षष्ठ्यर्थः। स्वविषयेष्वित्यत्र निरूपितत्वं सप्तम्यर्थः। योग्यता कारणता। तथा चेन्द्रियनिष्ठा इन्द्रियविषयघटादिनिरूपिता या कारणता सा यथा अनादिस्तथा सकलशब्दनिष्ठा घटादिनिरूपिता योग्यताऽपि अनादिः। एवञ्च घटादिविषयकचाक्षुषादिज्ञाननिरूपिता योग्यता इन्द्रियनिष्ठा यथाऽनादिस्तथा शब्दनिष्ठा अर्थविषयक ज्ञाननिरूपिता योग्यताऽप्यनादिः। इयञ्च योग्यतारूपा शक्तिः पदार्थान्तरम्। बोधजनकत्वं शक्तिरिति भूषणकाराभिमतं मतम्। किन्तु बोधजनकत्वं शक्तिः अपि सम्बन्धो भवितुं नार्हति, पदे वृत्तितानियामकेन स्वरूपसम्बन्धेन स्थिता अपि पदार्थे तु वृत्तिताऽनियामकेन निरूपकतासम्बन्धेन तस्याः स्थितत्वात्। मञ्जूषाकृन्मतम् - भट्टनागेशमते पदपदार्थयोः सम्बन्धान्तर मेव शक्तिः, तस्याः शक्तेः नाम वाच्यवाचकभावोऽस्ति। अस्याः शक्तेः बोधकः तादात्म्यसम्बन्धः, तादात्म्यस्य च इतरेतराध्यासो वर्त्तते। पदार्थनिरूपिततादात्म्यवत् पदम्, पदनिरूपिततादात्म्यवान् अर्थः इति व्यवहारे प्रसिद्धत्वात् तादात्म्यस्य द्विष्ठत्वात् सम्बन्धत्व मुपपन्नम्। शक्त्या शाब्दबोधजननाय सम्बन्धः एव नियामको भवति। यथा दीपकादौ विद्यमाना प्रकाशिका शक्तिः वस्तु तावन्न प्रकाशयितुं प्रभवति यावत् प्रकाशस्य घटादिविषयस्य च संयोगसम्बन्धो न स्यात्। तस्मादेव प्रकाशेन सम्बद्धस्यैव घटादेः प्रकाशो भवति नासम्बद्धस्य।ह प्रकाशकः शक्तिः

प्रकाशः विषयः सम्बन्धः फलम्
दीपकः प्रकाशकता आलोकः घटः
संयोगः घटप्रकाशनम्
पदम् वाच्यवाचकभावः वाचकः(पदम्)
वाच्यः (अर्थः) तादात्म्यम् बोधः

तथा च वाच्यवाचकभावरूपशक्तेः ज्ञानं तादात्म्यसम्बन्धेन भवति, तादात्म्यस्य च ज्ञानं शब्दार्थयोः परस्पराध्यासेन।

शक्तिभेदः - इयञ्च शक्तिः त्रिविधा - रूढिशक्तिः, योगशक्तिः, योगरूढिशक्तिश्च। तत्रादौ - रूढिशक्तिः8 - कल्पित प्रकृति प्रत्ययार्थबोधकत्वा समानाधिकरणा या किञ्चिदर्थनिरूपिता शक्तिः सा रूढिरित्युच्यते। मणिनूपुरशब्दौ शब्दकर्तृरूपार्थं स्तुतिसम्बन्ध्यग्रगमनकर्त्तारं वा न बोधयतः, अपितु रत्नमाभूषणविशेषं वेति रूढिशक्तिमत्त्वमनयोः। तथाहि समुदायार्थमात्रबोधकपदे शक्तिः रूढिः।

योगशक्तिः - अवयवार्थमात्रबोधकपदे शक्तिः योगः। यथा पाचक इत्यादौ। योगरूढिशक्तिः - यत्रावयवशक्तिसमानाधिकरणा च समुदायशक्तिस्तत्र योगरूढिशक्तिः। यथा पङ्कजादिपदे प्रकृति प्रत्ययार्थ पङ्कजनिकर्तृत्वशक्तिसमानाधिकरणा पद्मेति समुदायशक्तिः, तस्माद्योगरूढि शक्तिमत्वमस्य। क्वचित् योगरूढशब्देषु तात्पर्य्यग्राहकानुसारं रूढ्यर्थमात्रस्य योगार्थमात्रस्य वा बोधो भवति। यथा 'भूमौ पङ्कजम् उत्पन्नम्' इत्यत्र पङ्कजपदात् स्थलकमलम् इति रूढ्यर्थस्य एव भूमिपदसन्निधानात् बोधः, न तु पङ्कजनिकर्त्तृरूपस्य योगार्थस्य। शक्तिनियामकाः - नानार्थकशब्देषु वाच्यवाचकभावरूपा नाना शक्तिः भवति, सा संयोगविप्रयोगादिभिः शक्तिनियामकैः क्वचित् एकत्र अर्थे निश्चीयते। ते शक्तिनियामकास्तु - संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता। अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः। सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः। शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः। (वाक्यपदीयम् ) भर्तृहरेः कारिकायामस्यां नाम्ना चतुर्दश शक्तिनियामकाः उक्ताः, तेषाञ्च क्रमशः उदाहरणानि प्रस्तूयन्ते - संयोगः - प्रसिद्धसंयोगसम्बन्धः इति, अस्योदाहरणम् - 'सवत्सा धेनुरि'त्यत्र वत्सस्य संयोगसम्बन्धज्ञानेन धेनुपदस्य गौः इत्यर्थे तात्पर्य्यनिर्णयः।

विप्रयोगः - प्रसिद्धसंयोगसम्बन्धस्य विच्छेदः इति, अस्योदाहरणम् - 'अवत्सा धेनुरि'त्यस्य वत्ससंयोग रहिता गौः इत्यर्थः। प्राप्तौ सत्यां निषेधः इति नियमात् यत्र प्राप्तिः तत्रैव निषेधः जायते। वत्ससंयोगेन गवि एव धेनु तात्पर्य्ये प्राप्ते अवत्सापदेन तादृशधेनोः अर्थात् गोः एव निषेधः, न महिष्यादेः। अत्र वत्सविप्रयोगज्ञानेन धेनुपदस्य गौः इत्यर्थे तात्पर्य्यावधारणम्। साहचर्य्यम् - सदृशस्य युगपत् प्रयोगः इति, अस्योदाहरणन्तु 'रामलक्ष्मणौ' इत्यत्र रामसाहचर्य्यात् दशरथापत्यलक्ष्मणः, लक्ष्मण साहचर्य्याच्च दशरथापत्यरामः गृह्यते। एवञ्च परशुरामबलराम दाशरथिप्रभृतिनानार्थवाचकस्य रामशब्दस्य सारस दुर्योधन पुत्रदाशरथि प्रभृति नानार्थ वाचकस्य लक्ष्मणशब्दस्य विरोधिता - विरोधिभावः इत्यर्थः, अस्योदाहरणम् - 'रामार्जुनगतिस्तयोः' इत्युदाहरणम्। परस्परविरोधकारणात् परशुरामदाशरथ्यादिवाचकस्य रामस्य कार्त्तवीर्य्य सहस्रार्जुन पाण्डवार्जुन वाचकस्य अर्जुनस्य क्रमशः परशुरामे सहस्रार्जुने च शक्तिः नियम्यते।

अर्थः - प्रयोजनम्, अनन्यथासाध्यफलमित्यर्थः, अस्योदाहरणम् - 'अञ्जलिना जुहोति', 'अञ्जलिना सूर्य्यमुपतिष्ठते' इति । एकहस्ताञ्जलि-वाचकस्य, हस्तद्वयाञ्जलिवाचकस्य च अञ्जनिशब्दस्य अञ्जालिना जुहोति (हवनं कुर्य्यात्। इत्यत्र हवनरूपस्य अर्थस्य प्रयोजनस्य कारणात् एकहस्ताञ्जलिवाच्ये शक्तिः, अञ्जलिना सूर्य्यमुपतिष्ठते (सूर्य्योपस्थापनं कुर्य्यात्) इत्यत्र सूर्य्योपस्थापनरूपप्रयोजनबलात् हस्तद्वयाञ्जलिवाच्ये शक्तिः निश्चीयते। प्रकरणम् - वक्तृश्रोतृबुद्धिविषयतेत्यर्थः, अस्योदाहरणम् - 'सैन्धवमानयेत्यादिः।' लवण बोधकाश्वबोधक सैन्धवशब्दस्य भोजनज्ञानरूपे प्रकरणे लवणार्थे यात्राज्ञानप्रकरणे अश्वार्थे च शक्तिः अवधार्य्यते। लिङ्गम् - लीनमर्थङ्गमयति यत् तल्लिङ्गमर्थाज्ज्ञापक मित्यर्थः, अस्योदाहरणम् - 'अक्ताः शर्कराः उपदधाती'ति। अञ्जनञ्च आर्द्रीकरणद्रव्यम् घृततैलादिकम्। शर्कराः इष्टिकाचूर्णानि। उपदधाति अग्न्याधानार्थं वेद्यां परिस्थापयेत्। तथाहि अक्ताः इत्यादिवाक्यस्य अञ्जनविशिष्टेष्टिकाचूर्णानि अग्न्याधानार्थं वेद्यां स्थापयेदित्यर्थः। अत्र वाक्ये अक्तपदार्थघटकेन अञ्जनशब्देन घृतेन, तैलेन अथवा जलेन केन आर्द्रीकरणीयमिति विशेषनिर्देशाभावः। तथापि तद्वाक्यसमीपे तेजो वै घृतमिति घृतस्तुतिवाक्यप्रयुक्तत्वात् यः स्तूयते स विधीयते इति मीमांसाशास्त्रीयन्यायेन घृतेसाधकाञ्जने शक्तिः विधीयते। अन्यस्य शब्दस्य सन्निधिः - एकार्थमात्रवाचकपदसमीपोच्चारणमित्यर्थः, अस्योदाहरणम् - 'रामो जामदग्न्यः' इति । परशुरामबलरामदाशरथ्यादिवाचकस्य रामशब्दस्य जामदग्न्यपदसन्निधानात् जमदग्नेः अपत्यम् परशुरामार्थे शक्तिः अवधार्य्यते। सामर्थ्यम् - अचरितार्थशब्दार्थशक्तिः कारणता वेत्यर्थः, अस्योदाहरणम् - 'अभिरूपाय कन्या देया' इति। अभिरूपः अर्थात् सुन्दरः। कन्या अभिरूपाय सुन्दराय एव दीयते, पुनरपि अभिरूपाय इत्युक्ते सामर्थ्यात् विशेषणपदप्रयोगस्य सार्थक्यात् अभिरूपपदस्य अभिरूपतरे अतिशयसुन्दररूपवति इत्यर्थे शक्तिः लभ्यते। औचिती - औचित्यम्, योग्यता चार्थः, अस्योदाहरणम् - यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा। यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः। श्लोकार्थस्तु - निम्बं यः परशुना, यः मधुसर्पिषा, यश्च गन्धमाल्याद्यैः छिन्द्यात्, सिञ्चेत्, पूजयेच्च, तस्य तस्य सर्वस्य कृते सः निम्बः कटुः अर्थात् तिक्तस्वादवान् एव भवति। श्लोकेऽस्मिन् क्रियापदाभावेऽपि औचित्यात् योग्यत्वात् परशुरूपकरणस्य छेदनार्थत्वप्रतीतेः छिन्द्यात् पदम्, मधुसर्पिःकरणस्य सेचना-र्थत्वप्रतीतेः सिञ्चेदिति पदम्, गन्धमाल्यादिकरणस्य पूजनार्थत्वप्रतीतेः पूजयेदिति च पदमध्यह्रियते। देशः - स्थानमित्यर्थः, 'भात्यत्र परमेश्वरः' इत्युदाहरणम्। अत्र राजधानीदेशे परमेश्वरपदस्य राजेत्यर्थे शक्तिः निर्धार्य्यते। कालः - समयः इत्यर्थः, 'चित्रभानुर्भाती'त्युदाहरणम् । अग्नेः सूर्य्यस्य वाचकं चित्रभानुपदम्। अत्र अर्थसन्देहे कालेन निर्णयो भवति। यदि रात्रौ वाक्यप्रयोगः, तदा अग्निरूपार्थस्य, यदि च दिने वाक्यप्रयोगः, तदा सूर्य्यरूपार्थस्य निश्चयो भवति। व्यक्तिः - लिङ्गम् स्त्रीत्वपुंस्त्वाद्यर्थः, अस्योदाहरणम् - 'मित्रो भाति', 'मित्रं भाती'ति। अत्र पुँल्लिङ्गनिर्देशात् सूर्य्यवाचकस्य, क्लीबलिङ्गनिर्देशात् सुहृद्वाचकस्य शक्तित्वमवधार्य्यते। स्वरः - उदात्तादयः, उदाहरणन्तु - 'स्थूल पृषतीमनड् वाहीमालभेत' इति याज्ञिकैः उच्यते, अत्र स्थूला चासौ पृषती (पृषदिति शब्दः बिन्दुवाचकः) इति कर्म्मधारयसमासे पृषत् इति शब्दस्य मत्वर्थे लक्षणया पृषत्वती (बिन्दुमती) अर्थः भवति। तथाहि कर्म्मधारयपक्षे बिन्दुमती गौः एवाभिधीयते। स्थूलाऽपि गौः एव। बिन्दूनां स्थौल्यं कृशत्वं वेत्यत्र न आग्रहः। बहुव्रीहिसमासपक्षे च स्थूलानि पृषन्ति यस्याः सा इति विग्रहे स्थौल्यं तु पृषत्सु एव। गौः स्थूला कृशा वेत्यत्र न आग्रहः। तत्र स्थूलपृषतीम् इत्यत्र कर्म्मधारयः बहुव्रीहिः वेति सन्देहे वैयाकरणः स्वरेण निश्चिनोति। तत्र स्थूलशब्दस्य लकाराकारस्य उदात्तत्वं दृष्ट्वा पूर्व्वपदप्रकृतिस्वरेण11 बहुव्रीहिः निश्चीयते, अपि च पृषतीत्यस्य ईकारेऽन्तोदात्तत्वं दृष्ट्वा कर्म्मधारयः निश्चीयते। कर्म्मधारयपक्षे बिन्दुमती स्थूला गौः इत्यर्थः, अत्र स्थूलशब्दः गवि विशेषणम्। बहुव्रीहिपक्षे स्थूलबिन्दुमती गौः इत्यर्थः, अत्र स्थूलशब्दः बिन्दौ विशेषणम्। प्रकृतोदाहरणे पूर्व्वपदप्रकृतिस्वरेण लकाराकारस्य उदात्तत्वात् बहुव्रीह्यर्थस्य निर्धारणम्। आदिशब्देन ग्राह्याः - श्लोके आदिपदेन षत्व-सत्व-णत्व-नत्वादयः गृह्यन्ते।




इनरह्वील क्लब ऑफ इलाहाबाद उदिशा पक्षतः राष्ट्रीय चिकित्सक दिवसेगुरूवासरे गर्भवत्यानां महिलानां स्वास्थ्य परीक्षणं आकारितंताश्च उत्तमं स्वास्थ्यं प्रतिजागृतमपि क्रियतेस्म।

# आयुर्वेदस्य मूख्यलक्ष्यं स्वस्थस्य स्वास्थ्यसंरक्षणम्- प्रो. मेधावीलाल

**उदयपुरम्।** विश्व -संस्कृतप्रतिष्ठान -राजस्थानम् - उदयपुरेण 'वर्तमानपरिप्रेक्ष्ये आयुर्वेदस्य भूमिका' इति विषयमाधृत्य संस्कृतविदुषः डा. शक्तिकुमारशर्माणः स्मृतौ व्याख्यानमालारूपेण ओनलाइन-माध्यमेन संगोष्ठी आयोजिता अस्यां व्याख्यानमालायां डा. राधाकृष्णन राजस्थान - आयुर्वेद-विश्वविद्यालयस्य मौलिकसिद्धान्त - संस्कृतविभागे सहाचार्यपदम् अलंकुर्वती डा. मोनिकावर्मामहोदया मुख्यवक्त्री आसीत डा. वर्मा अकथयत् यत् साम्प्रतं विप्लुवकालः नास्ति कश्चन संदेहः यत् विज्ञानस्योन्नत्या सममेव पर्यावरणप्रदूषणम् , आधयः,व्याधयः,सामाजिकापचाराः अपि वर्धिताः अस्यां श्रृखलायां महारोगः कोविड -19 अप्यस्ति यदा रोगस्य चर्चा भवति आयुर्वेदः सद्यः मस्तिष्के समुद्भवति आयुर्वेदः वस्तुतः न केवलं चिकित्सा शास्त्रं अपितु लोकयात्रायाः सुव्यवस्थित निर्वहणमार्गोऽपि आयुर्वेदः प्रकृतिगामी कलाविद् वर्तर्तेमोक्षैकलक्ष्यता एनम् आध्यात्मशास्त्रस्य समानं स्थापयति, पदार्थमीमांसा दार्शनिकस्वरूपं प्रददाति तथा च सदाचारोन्मुखता नीतिशास्त्ररूपेण प्रतिष्ठापयति संक्षेपेण वक्तुं शक्यते यत् आयुर्वेदः समग्रजीवनपद्धतिं व्यनक्ति सहस्रेभ्यः वर्षेभ्यः भारतीयाः आयुर्वेदमनुसरन्तः जीवेम शरदः शतम् इति चरितार्थं कृतवन्तः आयुर्वेदस्य प्रमुखोद्देश्यं स्वास्थ्यसंरक्षणमस्ति। गुजरातेयुर्वेदविश्वविद्यालयस्य जामनगरस्य पूर्व कुलपतिना प्रो. मेधावीलालशर्मा वर्येण भणितं यत् आयुर्वेदः इति स्वास्थ्यरक्षणे आयुर्वेदस्य प्राधान्यमभिलक्ष्य आयुर्वेदः अथर्ववेदस्य उपवेदत्वेन प्रथमं भजते। मतमिदं चरकसुश्रुतवाग्भटादिभिः प्रमुखायुर्वेदाचार्यैरेव प्रकाशितम्। व्याख्यानकारः चक्रपाणिरपि एवं वदति 'आयुर्वेदस्य आयुर्वेदत्वमुक्तं भवति, अथर्ववेदैकशेष एव आयुर्वेदः' इति 'आयुर्वेद' - शब्दस्य व्युत्पत्तिं साधयद्भिराचार्यैः प्रकटीकृतम् - आयुरस्मिन् विद्यते, अनेन वा आयुर्विन्दति' इति। 'भावप्रकाश' - टीकाकारोपि'आयुर्वेद' शब्दम् एवं विशदीकरोति - अनेन पुरुषो यस्माद् आयुर्विन्दति वेत्ति च । तस्मान्मुनिवरेरेष 'आयुर्वेद' इति स्मृतः ? आयुर्वेदस्य इतिहासः वैदिककालादेव आरभ्यते। अतः पश्चात्सहस्रवर्षेभ्योऽपि प्राचीनोऽयं इतिहासः। आयुर्वेदस्य उत्कृष्टपरम्पराः न केवलं प्रचारे आसन् अपि तु तत्कालीनेषु प्रख्यातेषु नालन्दा, विक्रमशीला, वलभी इत्यादिषु विश्वविद्यालयेषु प्रमुखविषयत्वेन पाठ्यन्ते स्म। भारतीयेः सह विदेशीयच्छात्रा अपि अस्य प्रयोजनं प्राप्तवन्त आसन्। ग्रन्थस्यास्य महत्त्वमभिलक्ष्य अस्य नैकानि व्याख्यानानि रचितानि।चरक संहितायां 8 स्थानानि सन्ति। मूलतः एषा अग्निवेशेन रचिता संहिता।तत्र चरकमहर्षिणा प्रतिसंस्कारः कृतः। ततः दृढबलनाम्ना अपरेण वैद्येन संपूरणं कृतम। एवम् अद्य उपलब्धायां चरकसंहितायाम् एषां त्रयाणां कर्तृत्वं विद्यते। आयुर्वेदानुसारेण आयुः चतुर्विधम् - हितायुः, अहितायुः, सुखायुः, दुःखायुश्चेति हिताहितं सुखं दुःखं आयुस्तस्य हिताहितम् । मानं च तच्च यत्रोक्तं आयुर्वेदः स उच्यते मानसिक शारीरक रोगरहितस्य ज्ञानिनः सुदृढवतः मानवस्य आयुः सुखायुः। एतद्विपरीतं दुःखायुः। अरिषड्वर्गविजितस्य सर्वभूतहिते रतस्य आयुः हितायुः। तद्विरोधेअहितायुः भवति।

आयुश्च शरीरेन्द्रिय सत्त्वात्मसंयोगः। इत्थं हि शरीरं तु नानाविध-आधि-व्याधिनाम् आगारमेव। अतः व्याध्युपसृष्टानां व्याधिपरिमोक्षः, स्वस्थस्य स्वास्थ्यरक्षणं च आयुर्वेदस्य द्वे प्रयोजने। संगोष्ठ्यां नैके संस्कृतसुधयः सम्मान्याः चोपस्थिताः राजस्थान विद्यापीठस्य संस्कृतविभागाध्यक्षः डा. महेश-आमेटमहोदयः कार्यक्रमममुं अवसरेऽस्मिन् डा. शक्तिकुमारशर्माणः जीवनवृत्तं, कृतित्वं च विश्वसंस्कृतप्रतिष्ठानस्य चित्तौडप्रान्तस्य महिलाप्रमुखा डा.पञ्जमरमटमहोदया संगोष्ठयामस्यां अभिषेकदाधीचः इत्यादयः विद्वांसः प्रतिष्ठिताः च उपस्थिताः आसन्।

# त्रिलोकस्थाः वेदव्यासादिमुनिगणः

त्रिलोकस्थाः वेदव्यासादिमुनिगणः वेदपुराणादिशास्त्रादि न मथित्वा संसारसागरस्य ऐकान्तिकभावरूपं नवीनं निर्मलं हैयङ्गवीनं लभते स्म। तेन त्रिभुवने श्रीकृष्णस्य तुल्यः ख्यातोऽभवत्। कल्किपुराणे प्राप्यते कृष्णे भावमनन्यमेवममलं हैयङ्गवीनं नवम्। लब्ध्वा संसृति नाशनं त्रिभुवने श्रीकृष्णं तुल्यायते। भक्तिमाहात्म्यमिदं श्रवणकृते सति जीवस्य पापानि तत्क्षणादेव विनश्यति। अपि च मोक्षलाभार्थं अनेन कर्मणा सततं जीवस्य हरिभक्तिः वर्धते। सुदर्शनचक्रधारिणः श्रीकृष्णस्य सर्वाङ्गसुन्दररूपं संपश्य जाम्वुवान् मुक्तिं लभते स्म। नृपवरशशिध्वजकथितं चक्रमरणवृत्तान्तं यो मानवः मनोयोगसहकारेण शृणोति स एव सुखी कृतार्थः कान्तिमान् सन् मोक्षं लब्धुं शक्नोति। उक्तञ्च अस्मिन् पुराणे - आख्यानं परमादरेण सुखदं धन्यं यशस्यम्। श्रीमद्भूपशशि ध्वजेरितवचो मोक्षप्रदं चाभवत्। साधुसङ्गलाभः मुक्तिलाभस्य आयासहीनोपायः। कथं मन्तव्यमिदं सङ्गच्छते? तदुत्तरे उच्यते यद् साधोः हृदयमेव धर्मस्य आश्रयस्थलम्, तेषां वाचः देवाः सनातनाश्च, तेषां कृतकर्माणि सर्वकर्मक्षयार्थं व्यवहृयते। तस्मात् साधुजनः हि साक्षात् हरेः विग्रहस्वरूपः मन्तव्यमिदं निश्चितरूपेण कथयितुं शक्यते। साधुजनस्य अर्चनेन हरेरर्चनं सम्भवति। तेषां दर्शनेन न पुनर्गति जायते, स्पर्शेन च सर्वकल्मषं विनश्यति। वस्तुतस्तु यत्र साधुसङ्गः तत्र वसति हरिः। अतः साधुसङ्गः अपूर्वं फलं यच्छति। अत्रोल्लिख्यते - यत् पूजायां भवेत् पूज्या विष्णुर्जन्म न दर्शनात्। पापक्षयं स्पर्शनाच्च किमहो साधुसङ्गमः। साधूनां हृदयं धर्म्मो वाचो देवाः सनातनाः। कर्मक्षयं च कर्म्माणि यतः साधुर्हरिः स्वयम्। विष्णुयशातुम्बुरुभ्यां सह देवगणोऽपि परम-पूज्यं देवर्षिं नारदम् अवलोक्य मुक्तिं लभते। अस्मिन् मायावृतभवसागरे हरिभक्तितरण्याः साधुसङ्गमः श्रेष्ठतारकः भवति। विश्वतारकनारदस्य श्रीमुखात् मायाजीवसंवादं श्रवणकृते भवसागरस्य सर्वदुःखात् जीवात्मानं रक्षति। तेन परमकल्याणमयं निर्वाणपदं लब्धुं शक्नोति। आत्मसमर्पणमाध्यमेन मुक्तिः - माया हि शक्तिशालिनी, सर्वैश्वर्यमयी, शुभदायिनी,लीलाबीजस्य त्वक्स्वरूपा। सा नानारूपेण ब्रह्माण्डस्य आदि-मध्य-अन्तःस्थलेषु विराजमाना। जीवस्य मायाविषये सम्यक् ज्ञानार्जनं कुर्यात्। ततः परं आत्मस्वरूपम् अवगम्य हरौ आत्मसमर्पणं कुर्यात्। अस्मिन् स्थले जीवं फलाकाङ्खारहितं, ममताशून्यं, शान्तं, सर्वविधभोगेषु स्पृहाशून्यं च भवितुम् अर्हति। विश्वमिदं हरौ अवस्थितं विषयोऽयं नित्यं जीवस्य मनसि ध्यायेत्। हरि अपि जगतः सर्वभूतेषुसदैव विराजित इति मत्वा सर्वत्र अभेदम् अनुपश्येत्। समानरूपा उक्तिश्च दृश्यते ईशोपनिषदि - यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति। तत्र को मोहः कः शोकः एकत्वमनुपश्यतः। एवम् अभेदतत्त्वं यस्तु नित्यमनुभवति स तत्त्वदर्शी सर्वकर्माणि परित्यज्य परमात्मनि लीनं भवति। मायाजीवसंवादे नारदेन कथ्यते - निराशो निर्म्ममः शान्तः सर्वभोगेषु निस्पृहः विष्णौ जगदिदं ज्ञात्वा विष्णुर्ज्जगति वासकृत्। आत्मन्यात्मानमावेश्य सर्वतो विरतो भव। व्रतपालनमाध्यमेन मुक्तिः सर्वपाप नाशक मोक्षदायकरुक्मिणीव्रतपालनेन मुमुक्षुजनस्य श्रीहरिचरणकमलेषु महती भक्तिः समुत्पाद्यते। तेन ब्रह्मविद् परमगतिं लब्धुं शक्नोति। अत्र शम्भलग्रामः मोक्षदायकक्षेत्ररूपेण उल्लिखितोऽस्ति।

तत्रस्थिताष्टषष्टि तीर्थं सर्वतीर्थेषु अन्यतमम्। अस्मिन् तीर्थे कस्यचित् नरस्य यदि मरणं भवेत् तर्हि स अवश्यमेव भगवतः कल्केः चरणकमलेषु आश्रयं प्राप्नोति। अपि च तेन कृतपापानि सत्वरं विनश्यते। यदर्थं स मोक्षास्पदं भवति। उक्तञ्च कल्किपुराणे - यत्राष्टषष्टितीर्थानां सम्भवः शम्भलेऽभवेत्। मृत्योर्मोक्षः क्षितौ कल्केरकल्कस्य पदाश्रयात्। न केवलं ये भावुकाः आग्रहभक्तिभ्याञ्च पुरुषोत्तमकल्केः पूतचरित्रं शृण्वन्ति, तस्य नाम संकीर्तयन्ति चिन्तयन्ति वा, ते अवश्यमेव अस्मात् भवार्णवात् मोक्षं लभन्ते। गङ्गातीर्थसेवनेन मुक्तिः सुरतरङ्गिनी, हरिपादपद्मविहारिणी, पुण्यसलिला गङ्गा जगतः सर्वान् जीवान् संसारसागरात् त्रायते रक्षति च। अस्मिन् पुराणे प्राप्यते - 'भववारिधेस्तायिनी।' अस्याः पुण्यसलिलेन जीवस्य पापपङ्कं प्रक्षालितं भवति। देवासुरमानवादिभिः स्तुत्या गङ्गा सर्वेषां पापानि नाशयित्वा मुक्तिं यच्छति। सा ब्रह्मणः कमण्डलसम्भूता, मुक्तिबीजमयी लतास्वरूपा विमुक्ति फलनाशिनी कलुषनाशिनी राजते। त्रिभुवन विश्रुतगङ्गायाः दर्शनेन, प्रणतिज्ञापनेन, महिमाकीर्तनेन च जगतः सर्वपापानि दूरीभूतानि भवन्ति। सगर वंशीयनृपगणः अनेन मुक्तं भवति। परिशेषे उच्यते यद् जीवस्य परमपुरुषार्थः भवति मोक्षः। तद् प्राप्ते सति जीवस्य दुःखत्रयस्य उत सर्वविधकेलस्य विनाशं भवति। तत्तु सम्भवं केवलं ज्ञानमार्गेण उत कर्ममार्गेण। मोक्षदायके कल्किपुराणे उभय विधस्रोतसः धारा प्रवहति। तत्र ब्रह्मणः सेवा, विष्णुदेवस्य अर्चनम्, श्रवणम्, पठनम्, नाम संकीर्तनम्, तीर्थस्नानम्, व्रतानुष्ठानम्, साधुसङ्गम इत्यादिविषयाः मोक्षलाभस्य उपायरूपेण वर्णिताः। मोक्षलाभार्थम् ईदृशानि कर्माणि अपरिहार्यानि। अतः कल्किपुराणस्य सम्यक् अध्यनम् आवश्यकमिति।






उ0प्र0सर्वकार मनोरञ्जनादिक्षेत्राणां सञ्चालकानामार्थिकविपन्नतायां विचारं कुर्वन्नेतन्निर्णयं कृतवान् यत् दिं0-05 जुलाई मासतः 'मल्टीप्लेक्स-सिनेमाहॉल-स्टेडियम' इति व्यक्तिगतसंस्थाः पञ्चशत प्रतिशत क्षमतानुसारं सामान्य जनानां कृते 'कोविड प्रोटोकाल' इति नियमस्यानुपालेन सह समुद्घाटिता भविष्यन्ति।

# सत्सङ्गसुधा

संसारे जीवने च विरसताया अनुभवकरणम्, विषयैः सह चेतस आसक्तेः परित्याग एव वैराग्यमस्ति। लौकिकेषु पारलौकिकेषु च भोगेषु विरसताया अनुभवकरणमेव वैराग्यमुच्यते। केनापि वस्तुना सह घृणया द्वेषेण वाऽप्रीतिकर भावोत्पत्तिरेव न भवति वैराग्यम्। विषयेन्द्रिययोः संयोगेन रागस्योत्तपत्तिर्भवति। अत एव विषयाणां नश्वरत्वविचारस्य चेतसि दृढीकरणम्, विषयेषु च चेतसः समासक्तेर्वारणमेव यथार्थतया वैराग्यमस्ति। विवेकचूडामणौ यथोक्तम्-'तद्वैराग्यं जुगुप्सा या दर्शनश्रवणादिभिः। देहादिब्रह्मपर्यन्ते ह्यनित्ये भोगवस्तूनि।।' इति अपि च 'यद्युज्यतेऽसु वसुकर्ममन वचोभिर्देहात्मजादिषु नृभिस्तदसत् पृथक्त्वात्। तैरेव सद् भवति यत् क्रियते पृथक्त्वात् सर्वस्य तद् भवति मूलनिषेचनं यत्।' इति। श्रीशुकदेवमहाभागाः समुपदिशन्ति, लोके मनुष्यः प्राणधनकर्ममनवाण्यादिभिः स्वशरीरस्य पुत्रादीनां च कृते यत्किञ्चदपि कार्यं करोति, तत्सर्वं वृथैव भवति; यतोहि तन्मूले भेद्बुद्धिः कार्यं करोति। अत एव यदा विचार्य सर्वाणि कार्याणि भगवत्प्रीतये निष्कामभावेन प्रमुदितमनसा परेषां हिताय क्रियन्ते, तदा भगवन्मङ्गलमयविधानेन जनानां सर्वविधपरमकल्याणं भवतीति सिद्धन्तमस्ति, यथा वृक्षमूले जलाभिसिञ्चनेन तस्य शाखाः,पत्राणि, पुष्पाणि फलानि च स्वतः सम्वधर्यन्ति फलन्ति च, तथैव यदा कश्चिन्मनुष्यः लोके भगवत्प्रसन्नार्थं यत्किञ्चिदपि कार्यं करोति, तदा भगवत्कृपया तस्य मनुष्यस्य सर्वविधपरमकल्याणं भवति। एतादृशाः पुण्यशालिनो मनुष्याः लोके भगवत्कृपापात्राः भूत्वा सदैव सर्वत्र समादरणीयाः भवन्ति।

# 'तत् पवित्रस्थानं पुण्यस्थलं वा यत्र धर्ममयभावेन श्रद्धापूर्वकं जनाः यात्रापूजास्नानार्थं गच्छन्ति'

महाकविकालिदासः संस्कृतसाहित्यस्य अमरकविरस्ति। ते संस्कृतसाहित्यजगति स्वसप्तकृतिभिः मूर्धन्यस्थानं लब्ध्वा कविशिरोमण्युपाधिं प्राप्तवन्तः। महाकविकालिदासस्य कृतिषु लोकजीवनं प्रधानम्। तेषु कृतिषु लोकसंस्कृतिः प्रेमसौन्दर्यं प्रकृतिः धर्मः दर्शनमादयः च विशदरूपेण वर्णिताः। महाकविकालिदासेन स्वरचनासु तीर्थमाहात्म्यमपि प्रतिपादितम्। तीर्थेन तात्पर्यमस्ति- 'तत् पवित्रस्थानं पुण्यस्थलं वा यत्र धर्ममयभावेन श्रद्धापूर्वकं जनाः यात्रापूजास्नानार्थं गच्छन्ति।' हिन्दूधर्मशास्त्रे त्रिविधं धर्मं स्वीकृतम् - (क) जङ्गमः (ख) मानसः (ग) स्थावरः। अत्रापि त्रिविधं तीर्थं प्राप्यते। महाकविकालिदासेन स्वरचनासु महर्षिनारदकण्वविश्वामित्रवशिष्ठदुर्वासामारीचपरशुरामादीनामृषीणां महिमामण्डनं कृतम्, यत् जङ्गमतीर्थस्योदाहरणानि सन्ति। महर्षिमारीचस्य दर्शनमहत्त्वं प्रदर्शयन् राजादुष्यन्तः वदति, यत् – पूर्वं कारणं भवति, तत्पश्चात् कार्यं भवति। किन्तु भवतां दर्शनप्रभावात् मया पूर्वं सपत्नीपुत्रदर्शनं प्राप्तं, तत्पश्चात् भवतां दर्शनमभवत् - उदेति पूर्वं कुसुमं ततः फलं, घनोदयः प्राक् तदनन्तरं पयः। निमित्तनैमित्तयोरयं क्रमस्तव प्रसादस्य पुरस्तु सम्पदः। महाकविकालिदासस्य कृतिषु सत्यक्षमादयादानज्ञान विज्ञान धैर्य संयम मधुर भाषणादिनीति मूल्याः विकीर्णाः सन्ति, यत् मानसतीर्थस्य प्रतीकोऽस्ति। अत्र दानस्य सर्वश्रेष्ठोदाहरणं राजारघौ प्राप्यते। येन स्ववीर्येण समग्रभारतं जितम्, तत्पश्चात् विश्वजितियज्ञे दक्षिणारूपे सर्वस्वं दत्तम् - 'तमध्वरे विश्वजिति क्षितीषं निःशेषविश्राणितकोषजातम्। महाकविकालिदासेन प्रसङ्गानुसारेण विविधस्थावरतीर्थस्थलानां वर्णनं कृतम्। यानि निम्नबिन्दुषु द्रष्टुं शक्नुमः -

(1) देवगिरिः - महाकविकालिदासेन स्वखण्डकाव्यमेघदूते रामगिर्याश्रमात् अलकापुरीपर्यन्तं मार्गवर्णनं कृतम्। तस्मिन् मार्गे आगतानां स्थलानां वर्णनमपि कृतम्। तत्रैव कविः देवगिरौ स्थायीरूपे निवसन्तं कार्तिकेयं स्नापयितुं मेघं याचते। अद्यतन देवगढो एव देवगिरिरस्ति, यत्र स्कन्दस्य पवित्रस्थलमस्ति - तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा। पुष्पासारैः स्नपयतु भवान्व्योमगङ्गाजलार्द्रैः।

(2) कुरुक्षेत्रम् - महाकविकालि दासः मेघाय ब्रह्मावर्तजनपदस्य क्षत्रिययुद्धसूचककुरुक्षेत्रे वर्षितुं कथयति। यत्र गाण्डीवधनुर्धारी अर्जुनः कौरवेषु इषुप्रयोगमकरोत् - ब्रह्मावर्तं जनपदमथच्छायया गाहमानः क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः। राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि।

(3) उज्जयिनी - महाकविकालिदासेन उज्जयिनीनगरी देवैः नीता स्वर्गस्यांशं मतम् - प्राप्यवन्तीनुदयन कथा कोविद ग्रामवृद्धान् पूर्वोद्दिष्टामुपसर पुरीं श्रीविशालां विशालाम्। स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम्। अत्रैव सांयकाले शिवोपासनायाः वर्णनं प्राप्यते - अप्यस्त्जिलधर महाकालमासाद्य काले स्थातव्यं ते नयनविषयं यावदत्येति भानुः। कुर्वन्सन्ध्याबलिपटहतां शूलिनः श्लाघनीया मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम्। अन्यत्र च - नृत्यारम्भे हर पशुपतेराद्रनागाजिनेच्छां शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या।

(4) अयोध्या – रघुवंशकाव्ये इक्ष्वाकुवंशीराजानां जन्मभूमिरूपे अयोध्यानगर्याः विशदवर्णनं प्राप्यते। या धर्मप्रियस्य मनोः संतानानां समृद्धा नगरी आसीत् - सा मन्दुरासंश्रयिभिस्तुरङ्गै शालाविधिस्तम्भगतैश्च नागैः। पूरावभासे विपणिस्थपण्या सर्वाङ्गनद्धाभरणेव नारी।

(5) हिमालयः - महाकविकालिदासस्य कृतिषु हिमालयस्य विस्तृतवर्णनं कविना कृतम् यत्र कुमारसंभवे पार्वत्याः पितृरूपे समृद्धहिमालयस्य महिमावर्णनं अभवत्, तत्रैव मेघदूते हिमालयः भगवतः शिवस्य चरणचिह्नितो भूत्वा मुक्तेः पवित्रस्थानमस्ति। तत्रैव च सः हिमालयः शिवस्य शाश्वतगणप्रदं प्रदाता अस्ति। तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौलेः शश्वत्सिद्धैरुपचितबलिं भक्तिनम्रः परीयाः। यस्मिन्दृष्टेकरणविगमादूर्ध्वमुद्धूतपापाः कल्पिष्यन्ते स्थिरगणपदप्राप्तये श्रद्दवानाः।

(6) नैमिषारण्यम् - रघुवंशे नैमिषारण्यतीर्थस्योल्लेखः प्राप्यते। तत्रोल्लिखितं यत् राजा सुदर्शनः स्वपुत्राग्निवर्णनं अयोध्यायामभिनिषिच्य नैमिषारण्यतीर्थं गतवान् - अग्नि वर्णनमभि निषिच्य राघवः स्वे पदे तनयमग्नितेजसम्। शिश्रिये श्रुतवतामपश्चिमः पश्चिमे वयसि नैमिषं वशी। तत्र राजा सुदर्शनः तीर्थसलिले सर्वभोगान् विस्मृतवान् – ' तत्र तीर्थसलिलेन दीर्घिकास्तल्पमन्तरितभूमिभिः कुशैः।' राजा पुरुरवाऽपि नैमिषारण्यतीर्थे यज्ञकार्यं कृतवान् - 'राजा – सखे! कथमेतत्। अन्यत्र नैमिषेयसत्रादवियुक्तोऽहमुर्वश्या।' (7) सोमतीर्थम् - अभिज्ञानशाकुन्तले सोमतीर्थस्य उल्लेखः प्राप्तः। महर्षिः कण्वः शकुन्तलायाः प्रतिकूलदैवस्य शमयितुं सोमतीर्थं गतवान् - 'वैखानसः – इदानीमेव दुहितरं शकुन्तलामतिथि सत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः।

# साहित्यजगति काव्यपत्ररूपेणैव विरचितः 'आर्स-पोएतिका' तस्य प्रसिद्धो ग्रन्थः

वैशिष्ट्यं स्थानञ्चानुपममिति प्राच्यपाश्चात्त्यविदुषामभिमतम्। पाश्चात्त्यकविषु वर्जिलमहोदयानन्तरं तस्यैव नाम सविशेषेण समाद्रियते। तस्य साहित्यसमीक्षासंबद्धविचारेषु यूनानीकाव्यशास्त्रस्य विशेषतो अरस्तूमहोदयस्य काव्यशास्त्रीयचिन्तनस्य महत्प्रभावः परिलक्ष्यते, तथापि तद्विरचितो ग्रन्थः 'आर्स पोएतिका' यो हिन्दीभाषायां काव्यकला इति नाम्ना अनूदितः, स ग्रन्थो रोमनकाव्यशास्त्रस्य सर्वाधिको महत्त्वपूर्णो ग्रन्थः स्वीक्रियते, मन्यते च। होरेसमहोदयो मुख्यतः कवि आसीत् परं तद्विरचिताः व्यङ्ग्यपरकनिबन्धः काव्यशास्त्रसंबद्धविचाराश्च महत्त्वपूर्णाः मन्यन्ते। साहित्यजगति काव्यपत्ररूपेणैव विरचितः 'आर्स-पोएतिका' तस्य प्रसिद्धो ग्रन्थः। पत्ररूपेण विरचितत्वादत्र सत्काव्य-नाटकमौचित्यप्रभृतयः काव्यशास्त्रसंबद्धा गभीरविषया अपि अत्यन्तं सरलरीत्या निरूपिताः सन्तीति ग्रन्थस्यास्य वैशिष्ट्यम्। ग्रन्थेऽस्मिन् यद्यपि आलोचक-चिन्तकयोः विश्लेषणं सूक्ष्मविवेचनञ्च न प्राप्यते परं काव्यशास्त्रपरकं व्यावहारिकं ज्ञानं प्रचुररूपेण सविशेषेण च प्राप्यते। तच्च ज्ञानं सम्यक्रूपेण सूक्तिभिः सारपूर्ण-वाक्यखण्डेन वाक्यशैल्या च प्रस्तौत। यद्यपि सिद्धान्तदृष्ट्या ग्रन्थोऽयं काव्यशास्त्रक्षेत्रे न किमपि विशिष्टं योगदानं प्रददाति न चालोचकैः ग्रन्थोऽयं बहुधा प्रशंसितः, तथाप्यत्रा प्रतिपादिताः काव्यशास्त्रसंबद्धविचाराः सर्वथा समाद्रियन्ते।

